यथैवार्षेयकल्पेनोक्तमिति चैरकल्भिः* ॥ २० ॥

चैरकल्भिः आचार्य्य आह यथैवार्षेयकल्पेनोक्तमयनं तथैव स्यादिति परं नः प्रमाणं मशक इति एवमेते सर्वे कल्पाः प्रमाणम् ॥ २० ॥

इति दशमस्य दशमी कण्डिका।

---

अथ एकादशी कण्डिका।

पौर्णमासीप्रभृतयो दीक्षाः कौण्डपायिनस्य † ॥ १ ॥

विचारितं दृतिवातवतोरयनं साम्प्रतं कौण्डपायिनं विधार्य्यते तत्र पठति मासं दीक्षिता भवन्ति मासं सोमं क्रीणन्ति तेषां द्वादशोपसद उपसद्भिश्चरित्वा सोममुपनह्य मासमग्निहोत्रं जुह्वति मासं दर्शपूर्णमासाभ्यां यजन्ते मासं वैश्वदेवेन मासं वरुणप्रघासैर्मासं शाकमेधैर्मासं शुनाशीर्य्येण त्रिवृता मासं पञ्चदशेन मासं सप्तदशेन मासमेकविंशेन मासन्त्रिणवेन मासमष्टादशत्रयस्त्रिंशान्यहानि द्वादशान्यहानि द्वादशाहस्य दशाहानि महाव्रतञ्चातिरात्रञ्चेति तत्र उपसद्भिश्चरित्वा सोममुपनह्य विधाय प्रायणीयमतिरात्राग्निहोत्रादीन् हविर्य्यज्ञानुपदिशति त्रिवृन्मासादींश्चान्यान् मासान् तत्रायं संशयः किं सत्त्रन्यायेन प्रायणीयोऽतिरात्रेषु श्रयाश्रवणान् माभूदिति एत-

---

* द्राह्यायणीये विशेषोऽस्ति।

† द्राह्यायणेऽप्येवम्।

स्मिन् संशये आचार्य्यैः स्वं स्वं मतं परिप्रश्नायमर्थो विचार्य्यते पौर्णमासीप्रभृतयो दीक्षाः कौण्डपायिनस्येति पौर्णमासारम्भाः पौर्ण-मासीप्रभृतयः दीक्षाः प्रभृतिशब्दः आद्यर्थः कौण्डपायिनस्येति सम्बन्ध-लक्षणा षष्ठी ॥ १ ॥

तस्योपसदन्त उपवसथकर्म कृत्वातिरात्रमुपेयुरिति शा-ण्डिल्य एवꣳ हि गृह्यते वृत्तिः* ॥ २ ॥

कौण्डपायिनस्य उपसदन्त उपवसथकर्म कृत्वातिरात्रमुपेयुरिति शाण्डिल्य आचार्य्य आह किं कारणं यस्मादेवं वृत्तिर्गृह्यते सर्व-सत्राणाम् ॥ २ ॥

तत ऊर्द्ध्वं प्रातराहुत्युपक्रमाः सायमाहुतिसꣳस्था एका-ग्निꣳशतमहान्यग्निहोत्रं जुहुयुः* ॥ ३ ॥

ततस्तस्मादतिरात्रादूर्द्ध्वं प्रातराहुत्युपक्रमाः प्रातराहुत्यारम्भणाः सायमाहुतिसंस्थाः सायमाहुत्यपवर्गाः एकाग्निंशतमहान्यग्निहोत्रं जुहुयुः एवं शाण्डिल्यो मन्यते ॥ ३ ॥

मासमेवेति गौतमः सुत्यानान्तु पुरस्तादुपवसथकर्म स्यादतिरात्रस्यैवञ्च गृह्यते वृत्तिरव्यवायस्य हविर्यज्ञैः सुत्या-नाम् † ॥ ४ ॥

गौतम आचार्य्य आह मासमेवाग्निहोत्रं जुहुयुः मासो हि श्रुतः

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणोऽनेतेन सूत्रत्रयं क्रमम् ।

तस्य कुतः खण्डनमृते वचनात् किन्तु सुत्यानान्तु पुरस्तादग्निष्टोमादीन् शुनासीर्य्यान्तान् हविर्यज्ञान् उपरिष्टात्क्रमेण समाप्य ततः सुत्यानान्तु पुरस्तादुपवसथकर्म स्यादतिरात्रस्यैवञ्च गृह्यते वृत्तिः सर्वकर्मसु सुत्यानां पुरस्तादुपवसथकर्म भवति किञ्चान्यत् अव्यवायश्च हविर्यज्ञैरेवं क्रियमाणे सुत्यानां भवति ॥ ४ ॥

अश्रवणादतिरात्रो न स्यादिति धानञ्जप्यः प्रत्यन्ताद्धान्येषु चोदयन्नेह विदधाति* ॥ ५ ॥

धानञ्जप्य आचार्य्य आह अश्रवणादतिरात्रो न स्यादिति यदि अतिरात्रो दृष्टोऽभविष्यत् अश्रोषत् येन पुनस्तेषु सत्रेषु प्रतिसत्रञ्चोदयन् यावदन्त इति नेह विदधाति तस्मादकल्प्यो न श्रुतमतिरात्रं कल्पयितुम् ॥ ५ ॥

उपसदन्त एवोपवसथकर्म स्यात् † ॥ ६ ॥

उपसदन्त एव उपवसथकर्म भवेत् न सुत्यानन्तरम् ॥ ६ ॥

अष्टादशभ्यो वोर्द्ध्वं शौनासीर्य्येभ्यो राजानं क्रीणीयुरेवमनन्तरं सुत्याभ्यो भवतीति † ॥ ७ ॥

अथवाऽनेकदीक्षाणामनन्तरं सोमक्रयो न स्यात् शौनासीर्य्यान्यहान्यष्टादश कृत्वा ततः सोमं राजानं क्रीणीयुः एवं तत् राजक्रयादि कर्म अनन्तरं सुत्याभ्यो भवतीति ॥ ७ ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतं तथा विशेषश्च कृतः।

दीक्षोपसदां व्यवायो न्याय इति शाण्डिल्यायनस्ते मासि सोमं क्रीणन्तीति त्वानन्तरं दीक्षाभ्यः क्रयं दर्शयति* ॥ ८ ॥

शाण्डिल्यायन आचार्य्य आह दीक्षोपसदां व्यवायः अन्याय इति किन्त्वन्यत् ते मासि सोमं क्रीणन्तीति चैतत् ब्राह्मणमनन्तरं दीक्षाभ्यः क्रयं दर्शयति ॥ ८ ॥

उपवसथकर्म्मैवानन्तरꣳ सुत्याभ्यः स्यात् † ॥ ९ ॥

उपवसथकर्म्मैवानन्तरं सुत्याभ्यः स्यादतिरात्रो न स्यात् ॥ ९ ॥

आग्नीध्रीयादङ्गारान्मार्जालीयꣳ हृत्वा पृथक् स्थालीपाकान् श्रपयित्वा पितृयज्ञान् कुर्वीरन् † ॥ १० ॥

दर्शे पितृयज्ञा भवन्ति तेषां विधिरुच्यते आग्नीध्रीयादङ्गारान् मार्जालीयं हृत्वा पृथङ्नाना स्थालीपाकाञ्छ्रपयित्वा पितृयज्ञान् कुर्वीरन् ॥ १० ॥

ततो दक्षिणातिप्रणयेयुः पैतृयज्ञिकायाम् † ॥ ११ ॥

ततस्तस्मान्मार्जालीयात् दक्षिणे प्रदेशे अतिप्रणयेयुः पैतृयज्ञिकायां पितृमेधेषु ॥ ११ ॥

आहवनीयाद्दक्षिणतो वरुणप्रघासेषु तस्मिन् कुर्य्युर्यद्दक्षिणाहवनीये कृत्यमुपवसथकर्म चेत् कृतꣳ स्यात् ‡ ॥ १२ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

‡ द्राह्यायणेनैतेन सूत्रत्रयं कृतम् ।

कृतउपवसथानन्तरं आहवनीयप्रणयनं भवति वरुणप्रघासेषु यो द्वितीयोऽग्निः प्रणीयते दक्षिणतस्तमाहवनीयस्य दक्षिणे प्रदेशे प्रणयेयुः तस्मिन् कुर्य्युर्य्यत् कर्म दक्षिणाहवनीये कृत्यं तदुपवसथकर्मपूर्वकं स्यात् ॥ १२ ॥

यथा प्रकृत्यकृते* ॥ १३ ॥

अथ पुनरुपवसथकर्म नैव कृतं स्यात् तथा सत्यनन्तरं प्रकृतं तत इह आग्नीध्रीयादङ्गारादित्येतदादि यथा प्रकृत्यैव स्यात् ॥ १३ ॥

अग्निहोत्रमासे दीक्षितान्नस्याध्वर्युर्जुहुयादन्वारब्धा इतरे स्युः* ॥ १४ ॥

अग्निहोत्रमासे प्रकृतानां सत्रिणां अग्निहोत्रोच्छिष्टेन तृप्तिर्न कल्पते तदेव दर्शयति तेषामन्नं क्रियत इति दीक्षितार्थमन्नं तस्य दीक्षितान्नस्याध्वर्य्युर्जुहुयात् उक्तन्नाकृतस्याश्नीयुरिति इतरेऽध्वर्य्युमन्वारभेरन् जुह्वानम् ॥ १४ ॥

हवींष्येवेष्ट्ययनेषूपावद्येयुः † ॥ १५ ॥

इष्ट्ययनेषु हवींष्येवोपावद्येयुः नात्र दीक्षितान्नमग्निहोत्रमासवत् स्यात् तत्किमिदमारभ्यते यथा उक्तमेवाग्निहोत्रमासे दीक्षितान्नस्येति तत् कथमिष्ट्ययनेषु न स्यात् उच्यते अन्यार्थमेवैतदित्यादिश्यते हवींष्येवेष्ट्ययनेषूपावद्येयुरिति हविषामातृप्तिपरिमाणमुक्तम् इह तु तथा उपावद्येयुः यथा इष्टीनां हविःशेषेण यजमानतृप्तिः स्यात् ॥१५॥

---

* द्राह्यायणेऽप्येवम्। † द्राह्यायणीये विशेषोऽस्ति।

इति दशमस्य एकादशी कण्डिका।

## अथ द्वादशी कण्डिका ।

**अग्निहोत्रोपस्थानं विष्णुक्रमाः समिष्टयजूंषीति न क्रियेरन्नवभृथन्यङ्गश्चेति शाण्डिल्यः* ॥ १ ॥**

सोममुपनह्य मासमग्निहोत्रं जुहुयादिति इत्युक्तं तस्मिन् कर्मणि यत् प्राप्तं कर्म तत्र किञ्चिद्वचनेन निवर्त्यते अग्निहोत्रं तावदुपस्थानमिष्टिषु विष्णुक्रमाः समिष्टयजूंषि अवभृथन्यङ्गश्चेति एतानि न क्रियेरन् इत्येवं शाण्डिल्य आचार्यो मन्यते एतेषां प्राप्तप्रतिषेधः ॥ १ ॥

**समिधस्त्वादध्युर्य्यास्तत्र पुरस्तादुक्ताः † ॥ २ ॥**

समिधस्त्वादध्युर्या अस्मिन्नवभृथन्यङ्गेषु पुरस्तादुक्ताः अवभृथन्यङ्गं प्राप्याभ्युत्तणप्रभृति सौत्यं कर्म समापयेयुरित्येतस्मिन् प्रकरणे तत्र हि समिदाधानान्तं भवति ॥ २ ॥

**सर्वं क्रियेतेति धानञ्जप्यः † ॥ ३ ॥**

धानञ्जप्य आचार्य्य आह अग्निहोत्रोपस्थानादि सर्वं क्रियेतेति ॥ ३ ॥

**मासं दर्शपूर्णमासाभ्यामित्यामावास्येन पूर्वपक्षमितरं पौर्णमासेन* ॥ ४ ॥**

मासन्दर्शपूर्णमासाभ्यां यजेरन्नित्युक्तं तत्रामावास्येन हविषा पूर्वपक्षं यजेरन् इतरमपरपक्षं पौर्णमासेन यजेरन् ॥ ४ ॥

---

* द्राह्यायणोमेतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

**आमावास्ये पितृयज्ञः सकृत्कृत्वा न स्यादिति गौतमः* ॥५॥**

आमावास्ये कर्मणि पितृयज्ञः सकृत्कृत्वा प्रथमे इतरेषु न स्यादित्येवं गौतम आचार्यो मन्यते सति दर्शाङ्गत्वे कालेऽपि न स्यात् पितृयज्ञः अमावस्यायाम् ॥ ५ ॥

**न सकृच्च न स्यादिति शाण्डिल्यः* ॥ ६ ॥**

शाण्डिल्य आचार्य्य आह असकृदपि न स्यात् पितृयज्ञः नाङ्गमेतद्दर्शस्येति ॥ ६ ॥

**अहरहः स्यादिति धानञ्जप्यः* ॥ ७ ॥**

धानञ्जप्य आचार्य्य आह यावत्कालममावस्या तावत्कालः पितृयज्ञः स्यात् दर्शाङ्गं हि स इति ॥ ७ ॥

**मासꣳ साकमेधैरिति गृहमेधीयेनेष्ट्वा तदैव शेषꣳ सꣳस्थापयेयुरेवं त्रिꣳशत्कृत्व उपेता भवन्तीति † ॥ ८ ॥**

मासं साकमेधैर्य्यजेरन्निति ब्राह्मणं तत्र गृहमेधीयेनेष्ट्वा पूर्वेद्युः कर्म संस्थापयेयुः एवं क्रियमाणेन साकमेधीयं कर्म त्रिंशत्कृत्व उपेतं भवतीति ॥ ८ ॥

**शुनासीरीयापवर्गास्त्वेषां प्रकृतौ पञ्चदशकृत्व एवाभ्यस्येयुः समासः* ॥ ६ ॥**

तुशब्दो हेत्वर्थः एषां साकमेधानां प्रकृते शुनासीरीयेणापवर्गो दृष्टः

---

* आश्वलायनोऽप्येवम्।

† आश्वलायनेनैतेन सूत्रद्वयं कृतम्।

इहापि अहापवर्गतामेव कल्पयित्वा पञ्चदशरात्रोऽभ्यस्येयुः समासो भवति एवं मासशब्दस्यार्थवत्त्वं कृतं भवति ॥ ९ ॥

अग्निहोत्रं दशहोतेति दशहोतारं नामाध्वर्यवोऽग्निहोत्रोपस्थानमधीयते* ॥ १० ॥

अग्निहोत्रं दशहोता दर्शपूर्णमासं चतुर्होता चातुर्मास्यानि पञ्चहोता सौम्याध्वरे सप्त होतेति ब्राह्मणं तत्र अग्निहोत्रं दशहोतेति दशहोतारं नामाध्वर्यवः अग्निहोत्रस्योपस्थानमधीयते तदभिप्रेत्येतद्ब्राह्मणम् ॥ १० ॥

ऋत्विज उत्तरैरभिप्रेताः* ॥ ११ ॥

उत्तरैर्वचनैर्यदुक्तं तत्र ऋत्विजोऽभिप्रेताः दर्शपौर्णमासयोश्चत्वारो होतारः चातुर्मास्ये तु पञ्च ॥ ११ ॥

वषट्कारिणोऽध्वरे* ॥ १२ ॥

अध्वरे सोमे वषट्कारिणः सप्ततामनभिप्रेत्यैतद्ब्राह्मणं सौम्योऽध्वरः सप्तहोतेति ॥ १२ ॥

अतसकैश्चमसैर्भक्षयेयुः कुण्डप्रतिरूपैः † ॥ १३ ॥

ते सर्वे कुण्डपायिनोऽतसकैश्चमसैर्भक्षयन्तीति अतसकैरदण्डचमसैः कुण्डप्रतिरूपैः कुण्डसदृशैर्भक्षयेयुः ॥ १३ ॥

होत्रा समास उक्तो ब्राह्मणेन † ॥ १४ ॥

---

* द्राह्यायणेन सूत्रत्रयेणैकसूत्रं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

यो होता सोऽध्वर्य्युः सपोतेत्येतदादि समासः सङ्क्षेप एकीभावः ॥ १४ ॥

स्वादासनादुपसञ्चारं ब्रह्मेतरे होत्रे कुर्यात्* ॥ १५ ॥

स्वस्मादासनादुपसञ्चारेऽपि सञ्चार्य्य इतरे होत्रे मैत्रावरुणीय-प्रतिकर्त्रे कुर्य्यात् एतत् ज्ञापितं भवति ब्रह्मत्वेनासौ दीक्षितः इतरे होत्रे करोति ॥ १५ ॥

तथोद्गातृप्रस्तोतारावाग्नीध्रश्च* ॥ १६ ॥

तथा उद्गाता च स्वस्मादासनादुपसञ्चारमितरे होत्रे नेष्ट्रीयाच्छावाकीये कुर्य्यात् तथा प्रस्तोता इतरे होत्रे ग्रावस्तुत् ब्राह्मणाच्छंसीये स्वस्मादासनादुपसञ्चारं कुर्य्यात् तथाग्नीध्रीयेणासौ दीक्षितः इतरे उन्नेत्रे प्रतिप्रस्थात्रे कुर्य्यात् ॥ १६ ॥

गृहपतिर्गृहपतिः सुब्रह्मण्यः सुब्रह्मण्यइत्यसमासन्तयोर्हर्म्ययति* ॥ १७ ॥

गृहपतिर्गृहपतिः सुब्रह्मण्यः सुब्रह्मण्य इत्यनया वीप्सया ब्राह्मणमसमासन्तयोर्दर्शयति विज्ञापयति ॥ १७ ॥

इति दशमस्य द्वादशी कण्डिका ।

---

अथ त्रयोदशी कण्डिका ।

एतेनोक्तस्तापश्चितस्य दीक्षादिः* ॥ १ ॥

---

* आश्वलायनोऽप्येवम् ।

उक्तं कौण्डपायिनामयनम् अनन्तरं तापश्चितस्य आद्यं संवत्सरं दीक्षिता भवन्ति संवत्सरमुपसद्भिश्चरन्ति संवत्सरं प्रसुता भवन्तीति तस्य दीक्षाकाल उच्यते एतेनोक्तस्तापश्चितस्य दीक्षादिरिति एतेन कौण्डपायिनेन उक्तोव्याख्यातस्तापश्चितस्य दीक्षादिः पौर्णमासी-प्रभृतयो दीक्षा इति ॥ १ ॥

तस्यायनविचाराः* ॥ २ ॥

वक्ष्यन्त इति वाक्यशेषः अयनस्य विकल्पितं मध्यमेन गवा-मयनेन क्लृप्तं तापश्चितामयनं ज्योतिष्टोमेन वा विक्लृप्तेनेति तस्य विकल्प उच्यते ॥ २ ॥

ज्योतिष्टोमोऽतिरात्रः षोडशिमानव्हरहः स्यादिति धान-ञ्जप्यः* ॥ ३ ॥

ज्योतिष्टोमोऽतिरात्रः षोडशिमानव्यहनि स्यात् संवत्सरमिति शेषः ॥ ३ ॥

चत्वारोज्योतिष्टोमा अभिजिदेष पश्चादहः षट्सु मासेष्व-भ्यस्येत महाव्रतं विषुवानथैत एव मासा आवृत्ता विश्वजित्त्व-भिजित्स्थाने तत्पुरुषस्य नारायणस्यायनम् † ॥ ४ ॥

चत्वारो ज्योतिष्टोमाः ज्योतिष्टोमश्चतुरभ्यस्तः अभिजिदेष पश्चादहः षट्सु मासेष्वभ्यस्येत महाव्रतं विषुवान् स्यात् अथैत

* आम्नायशेषोऽप्येवम् ।

† आम्नायशेषेनैतेन पञ्च सूत्राणि कृतानि तथा विशेषश्च कृतः ।

एव मासा आवृत्ताः स्युः अयन्तु विशेषः विश्वजित्त्वभिजितः स्थाने स्यात् तत्पुरुषस्य नारायणस्यायनम् ॥ ४ ॥

अभिजिदहरहस्तदग्नेर्ज्योतिष्टोमो वा रथन्तरपृष्ठः * ॥५॥

तेनाभिजिद्विकल्पेन रथन्तरपृष्ठमिति नियमार्थम् ॥ ५ ॥

बृहत्पृष्ठ इन्द्रस्य † ॥ ६ ॥

बृहत्पृष्ठो ज्योतिष्टोमः संवत्सरमहरहः स्यात्तदिन्द्रस्यायनम् ॥६॥

व्यत्यासं वृहद्रथन्तरे पृष्ठे तदिन्द्राग्न्योः † ॥ ७ ॥

व्यत्यासं ज्योतिष्टोमे संवत्सरं बृहद्रथन्तरे पृष्ठे स्यातां तदिन्द्राग्न्योरयनम् ॥ ७ ॥

उभयसामा ब्रह्मप्राजापत्योः † ॥ ८ ॥

उभयसामा ज्योतिष्टोमः संवत्सरः स्यात् तद्ब्रह्मप्राजापत्योरयनं स्यात् ॥ ८ ॥

वायोर्वैरूपपृष्ठो व्रतं वा † ॥ ९ ॥

वैरूपपृष्ठो ज्योतिष्टोमः संवत्सरं स्यात् महाव्रतं वा संवत्सरमहरहः स्यात् तद्वायोरयनम् ॥ ९ ॥

आदित्यस्य वैराजपृष्ठो विश्वजिद्वा † ॥ १० ॥

वैराजपृष्ठो ज्योतिष्टोमः संवत्सरं स्यात् विश्वजिद्वा तदादित्यस्यायनम् ॥ १० ॥

---

* शाट्यायनेनैतेन सूत्रद्वयं कृतम् ।

† शाट्यायनोऽप्येवम् ।

अपां शर्करीपृष्ठः* ॥ ११ ॥

शर्करीपृष्ठो ज्योतिष्टोमः संवत्सरं स्यात् तदपामयनम् ॥ ११ ॥

गवां रेवतीपृष्ठः* ॥ १२ ॥

रेवतीपृष्ठो ज्योतिष्टोमः संवत्सरं स्यात् तद्गवामयनं स्यात् ॥१२॥

प्रजापतेर्वामदेव्यपृष्ठः* ॥ १३ ॥

वामदेव्यपृष्ठो ज्योतिष्टोमः संवत्सरं स्यात् तत्प्रजापतेरयनम् ॥१३॥

विश्वेषां देवानाꣳस्वरपृष्ठः* ॥ १४ ॥

स्वरपृष्ठो ज्योतिष्टोमः संवत्सरं स्यात् एतद्विश्वेषां देवानामयनम् ॥ १४ ॥

सूर्य्यस्य दिवाकीर्त्यपृष्ठः* ॥ १५ ॥

दिवाकीर्त्यपृष्ठो ज्योतिष्टोमः संवत्सरं स्यात् तत्सूर्य्यस्यायनम् ॥१५॥

महेन्द्रस्य महाव्रतपृष्ठः* ॥ १६ ॥

महाव्रतपृष्ठो ज्योतिष्टोमः संवत्सरं स्यात् एतन्महेन्द्रायनम् एते विचारास्तापश्चितस्य ॥ १६ ॥

ज्योतिष्टोमेन त्रीण्युत्तराणि तस्य रथन्तरं पृष्ठं बृहच्च व्यत्यासम् † ॥ १७ ॥

तस्य तापश्चितस्य यानि त्रीण्युत्तराणि द्वादशसंवत्सरं षट्त्रिंशत् संवत्सरं शतसंवत्सरमिति एतानि ज्योतिष्टोमेन अभ्यस्तानि भवन्ति

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रत्रयं कृतं तथा विशेषश्च कृतः ।

तस्य ज्योतिष्टोमस्य रथन्तरं पृष्ठं बृहच्च व्यत्यासं व्यत्यस्य व्यत्यस्य व्यात्यासम् ॥ १७ ॥

यथैवार्षेयकल्पेनोक्तमिति क्षैरकलम्भिः* ॥ १८ ॥

क्षैरकलम्भिराचार्य्य आह एतेषामयनविधानं यथैवार्षेयकल्पेनोक्तं तथैव स्यादिति इति वातवतोरयने तत् क्लृप्तं प्रजापतेर्द्वादशसंवत्सरं षट्त्रिंशत्संवत्सरं शतसंवत्सरमिति ॥ १८ ॥

इति दशमस्य त्रयोदशी कण्डिका ।

---

अथ चतुर्द्दशी कण्डिका ।

अग्निष्टोमास्त्रिवृत उक्थ्याः पर इति तत्रावचनादतिरात्रा न स्युर्विषुवन्तश्चेति शाण्डिल्यः † ॥ १ ॥

इह ज्योतिष्टोमेन चीएुत्तराणीति प्रकृतं तेषु सर्वेषु संवत्सरचोदना न च प्रायणीयोदयनीयावादिष्टौ नापि विषुवान् तत्रायं संशयः किं संवत्सरन्यायं गृहीत्वा प्रायणीयोदयनीयातिरात्रवन्तो भवन्ति अथाग्रहणान्न भवन्तीति एतस्मिन् संशयेऽयमाचार्य्य आरभते अग्निष्टोमास्त्रिवृत इत्येतदादि सूत्रं सप्तक एतेषु ये त्रिवृदादिस्तोमाः संवत्सरान् अग्निष्टोमसंस्थान् कल्पयति यान् पञ्चदशान् तानुक्थसंस्थान् सोऽयमाचार्य्य एतदर्थं गृहीत्वा तु परीक्षितुमारभते

---

* आद्यायनीये विशेषोऽस्ति ।

† आद्यायनेनैतेन सूत्रद्वयं कृतम् ।

अग्निष्टोमाविह्रत उक्थ्याः पर इत्येतस्मिन् कल्पे अवचनादतिरात्रा न स्युः विषुवन्तश्चेति एवं शाण्डिल्य आचार्य्य आह ॥ १ ॥

इतरः सत्रन्याय इति धानञ्जप्यः* ॥ २ ॥

धानञ्जप्य आचार्य्य आह इतरो यो वक्ष्यते सत्रन्यायः स भवेत इह कः पुनरित्युच्यते ॥ २ ॥

अतिरात्रावभितः स्यातां मध्ये विषुवान् बृहत्पृष्ठो रथन्तरमध्यन्दिनः पञ्चदशः सप्तदशः † ॥ ३ ॥

प्रायणीयोदयनीयावतिरात्रौ स्याताम् आद्यन्तयोः सत्रस्य स्यातां मध्ये विषुवान् स्यात् बृहत्पृष्ठो रथन्तरमध्यन्दिनः पञ्चदश-सप्तदशौ स्तोमौ स्तोत्रेषु व्यत्यासेन स्याताम् एकत्रिक इव ॥ ३ ॥

एकैकस्मिन्वैतत्संवत्सरवर्गे स्यात् ‡ ॥ ४ ॥

त्रिवृदादिवर्गेषु आद्यन्तयोः प्रायणीयोदयनीयावतिरात्रौ मध्ये विषुवान् ॥ ४ ॥

उत्तमममुत्तमे वा संवत्सरे ‡ ॥ ५ ॥

वर्गाणामुत्तमे वा संवत्सरे एतत् स्यात् उत्तमस्योत्तमस्य संवत्-सरस्याद्यन्तयोः प्रायणीयोदयनीयावतिरात्रौ मध्ये विषुवान् ॥ ५ ॥

पृथग्वा संवत्सरेषु ‡ ॥ ६ ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

‡ द्राह्यायणेन सूत्रत्रयेणैकसूत्रं कृतम् ।

पृथक्संवत्सरेषु एकैकस्मिन् संवत्सरे आद्यन्तयोः प्रायणीयोदयनीयावतिरात्रौ मध्ये विषुवान् ॥ ६ ॥

तेषां यथास्तोमं विषुवन्तः स्युः* ॥ ७ ॥

तेषां संवत्सराणां यथास्तोमं विषुवन्तः स्युः योऽयं सस्तोमः संवत्सरस्तस्मिन् सस्तोमे विषुवान् स्यात् ॥ ७ ॥

रथन्तरपृष्ठो बृहद्ब्रह्मसामा त्रिवृताᳲ स्याद्बृहत्पृष्ठो रथन्तरमध्यन्दिनः परेषु † ॥ ८ ॥

त्रिवृतां संवत्सराणां रथन्तरपृष्ठो बृहद्ब्रह्मसामा विषुवान् स्यात् बृहत्पृष्ठो रथन्तरमध्यन्दिनः परेषु पञ्चदशादिषु संवत्सरेषु विषुवान् स्यात् ॥ ८ ॥

यजनीयेऽहनि प्रसवः स्यात् पूर्व्वपक्षे यद्यविषुवत्काः समार्द्धमासातिवर्त्तिषु* ॥ ९ ॥

यजनीयेऽहनि प्रतिपदि प्रसवो भवेत् प्रथमः स्रवः प्रसवः यद्यविषुवत्काः स्युः ततः पूर्वपक्षे स्यात् समार्द्धमासातिवर्त्तिनश्च यदि भवेयुः ॥ ९ ॥

अपरपक्षे विषमेषु* ॥ १० ॥

यदि विषमार्द्धमासातिवर्त्तिनः अविषुवत्काश्च ततो अपरपक्षे प्रसवः स्यात् ॥ १० ॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

सहस्रसाव्ये सहातिरात्राभ्याᳫं सहस्रमहानीत्याचार्य्याः सहस्रसाव्यमिति ह्याहेति* ॥ ११ ॥

सहस्रसाव्ये पठति अतिरात्रः सहस्रमहानीत्यतिरात्र इति तत्र संशयः किं सहातिरात्राभ्यां सहस्रमहानि स्युः उत विनातिरात्राभ्यामिति कुतः संशय उत्पन्न इति चेत् प्रत्यक्षायां श्रुतौ अतिरात्रः सहस्रमहानीत्यतिरात्र इति उच्यते समाख्यातः सहस्रसाव्य इति सहस्रमस्मिन् साव्या सहस्रसाव्यम् अत आचार्य्य आरभते सहस्रसाव्ये सत्रे सहातिरात्राभ्यां सहस्रमहानि स्युरिति यस्मादाह सहस्रसाव्यमिति ॥ ११ ॥

अन्तरेणेति शाण्डिल्यः सहस्रमहानीत्यन्तरेणातिरात्रावाह† ॥ १२ ॥

शाण्डिल्याचार्य्य आह अन्तरेणातिरात्रौ अन्यानि सहस्रमहानि स्युरिति यस्मादन्तरेणातिरात्रावाह सहस्रमहानीति अतिरात्रः सहस्रमहान्यतिरात्र इति अथ यदुक्तं समाख्यातः संशय उत्पन्न इति न हि प्रत्यक्षायां श्रुतौ समाख्या ग्राह्या प्रथमं हि विनियोगकारणं श्रुतिः दुर्बला समाख्या ॥ १२ ॥

तस्यायनविकल्पस्त्रिकद्रुकाश्चतुःषष्ठᳫं शतमभिप्लवानां दशरात्रो शतमिति दशरात्रो शतमिति‡ ॥ १३ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

‡ द्राह्यायणीये विशेषोऽस्ति ।

तस्य सहस्रसाव्यस्यायन उच्यते अतिरात्रौ तावत्प्रत्यक्षमिष्टौ अन्यदपि सहस्रमयनं यच्चोदितं तत् सप्तकेन विकल्पितं ज्योतिष्टोमेनाविकृतेन कृप्तम् अग्नेः सहस्रसाव्यं गौरीवितस्य स्वरेण वा तत्रायं विकल्प उच्यते अतिरात्रौ तावत् प्रत्यक्षमिष्टौ अन्यत्त्रिककद्रुकास्तुःषष्ठं शतमभिप्लवानां दशरात्रो शतमिति एतदहः सहस्रं त्रिककद्रुका ज्योतिर्गौरायुरिति चतुःषष्ठ्यधिकं शतं अभिप्लवानां दशरात्रोशतमिति ॥ १२ ॥

इति दशमस्य चतुर्दशी कण्डिका।

---

अथ पञ्चदशी कण्डिका।

दक्षिणे तीरे सरस्वत्या विनशनस्य दीक्षेरन् सारस्वताय षष्ठ्यामपक्षस्येति गौतमः* ॥ १ ॥

सहस्रसाव्यमुक्तम् अनन्तरं सारस्वतान्युच्यन्ते तत्र ब्राह्मणं सरस्वत्या विनशने दीक्षेत इति यस्मिन् देशे सरस्वत्यन्तर्भवति तद्विनशनमित्युच्यते तस्य विनशनस्य दक्षिणे कूले तीरे सारस्वताय तादर्थ्ये चतुर्थी षष्ठ्यां तिथौ पक्षस्य परिभाषितम् उदगयनपूर्वपक्षपुण्याहमिति गौतम आचार्य आह ॥ १ ॥

अमावास्यायामतिरात्रः स्यादेवं स्वस्थानमामावास्यं प्रयुज्यते* ॥ २ ॥

---

* द्राह्यायणेन सूत्रद्वयेन सूत्रत्रयं कृतम्।

उक्तं यदहरतिरात्रो भवति तदहर्वत्सानपाकुर्वन्ति संस्थितेऽतिरात्रे सान्नाय्येन यजन्त इति तद्वत्सापाकरणेन सान्नाय्ययोगेन च अतिरात्रस्यैव कालो ज्ञाप्यते वत्सापाकरणं हि अमावास्यायां भवति तदनन्तरेऽहनि सान्नाय्येन यागः सोऽयं गौतम आचार्य्य आह अमावास्यायामतिरात्रः स्यादेवं स्वस्थानममावास्यं प्रयुज्यत इति आमावास्यस्य हि पूर्वपक्षादिस्थानम् उक्तञ्च संस्थितेऽतिरात्रे सान्नाय्येन यजन्त इति तद्यद्यमावास्यायामतिरात्रो भवति ततस्तस्य स्वस्थानं पूर्वपक्षादौ भवति ॥ २ ॥

सप्तम्यां वा दीक्षित्वामावास्याया यजनीयेऽहन्यतिरात्रः स्यादिति धानञ्जप्यः* ॥ ३ ॥

धानञ्जप्य आचार्य्य एवमाह ॥ ३ ॥

समाधय उत्तराभ्याꣳसुत्याभ्याम् † ॥ ४ ॥

वक्ष्यति हि तेषां पौर्णमास्याङ्गोष्टोमस्तोमो भवतीति यजनीयेऽहनि स्यादित्याचार्य्या इति तथैवायुः प्रदेक्ष्यते एवन्तावत् आयुषो यजनीयेऽहनि क्रियोपदेक्ष्यते तद्यद्यतिरात्रोऽपि यजनीयेऽहनि क्रियते ततः गो आयुर्भ्यां समाधिः कृतो भवति एतदर्थं अतिरात्रोऽपि यजनीय एवाहनि स्यात् इति किञ्चान्यत् ॥ ४ ॥

स्वस्थानञ्चैवामावास्यं प्रयुज्यते* ॥ ५ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणीये एतन्नास्ति ।

यदुक्तममावास्यायामतिरात्रे क्रियमाणे पूर्वपक्षादौ स्वस्थानमामावास्यं प्रयुज्यते इतरथा हि क्रियमाणे न स्वस्थानमामावास्यं प्रयुज्यते किं कारणम् ॥ ५ ॥

पूर्वपक्षो ह्यामावास्यस्थानमिति* ॥ ६ ॥

कृत्स्नो हि पूर्वपक्ष आमावास्यस्थानं तदा दर्शितं ग्रन्थान्तरे ॥६॥

पुरा रात्रेः सायं दोहं दोहयेरन् सꣳस्थितेऽतिरात्रे प्रातर्दोहं तेन सान्नाय्येन यजेरन्† ॥ ७ ॥

प्रायात्रेरारम्भात् सायन्दोहं दोहयेरन् संस्थिते समाप्तेऽतिरात्रे प्रातर्दोहं दोहयेरन् उक्तं संस्थितेऽतिरात्रे सान्नाय्येन यजन्त इति ॥७॥

सान्नाय्येनेष्ट्वाध्वर्युः शम्यां परास्यतीत्याहवनीयन्यन्तेन तिष्ठन् प्राङ्मुखो नित्यमिष्टिसꣳस्थासु प्रास्येत्तदुक्तं ब्राह्मणेन‡ ॥ ८ ॥

उक्तं सान्नाय्येनेष्ट्वाऽध्वर्युः शम्यां परास्यतीति तच्छम्याप्राशनं कुत्र भवतीत्याह आहवनीयसमीपे तिष्ठन्निति क्रियोपदेशः न आसीनः तिष्ठन् प्राङ्मुखः नित्यमहन्यहनि इष्टिसंस्थासु इष्टिसमाप्तिषु प्रास्येत् प्रक्षिपेत् शम्यां तदुक्तं ब्राह्मणेन सा यत्र निपतति तद्गार्हपत्यंस्ततः षट्त्रिंशतं प्रक्रमान् प्रक्रामति तदाहवनीयमिति नित्यग्रहणम् अमा-

---

* ब्राह्मायणोऽप्येवम्।

† ब्राह्मायणेनैतेन सूत्रत्रयं कृतम्।

‡ ब्राह्मायणेनैतेन सूत्रद्वयं कृतम्।

वाश्यामन्तरं प्राग्वनं प्रकृतं तत्सर्वमकृतम् दृष्टिसंख्यास्तु च तत् स्यादिति नित्यग्रहणम् ॥ ८ ॥

चक्रीवत्ता च तथापि पत्नीशाला स्याच्छामित्रश्च* ॥ ९ ॥

पत्नीशालापि तथैव चक्रीवति स्यात् पत्नीशाला प्राग्वंशः शामित्रमपि चक्रीवदेव स्यात् शामित्रमुक्तलक्षणम् ॥ ९ ॥

तानि यथादेशं वर्त्तेरन् समश्चेद्भूमिभागः स्यात् † ॥१०॥

तानि सद आदीनि यथादेशं वर्त्तेरन् यो यस्य देशो यथादेशं स्वस्वदेशेन गच्छेयुर्यदि समोभूमिभागः स्यात् ॥ १० ॥

अनुपूर्वं विषमे † ॥ ११ ॥

यदि विषमो भूमिभागः स्यात् आनुपूर्व्येण वर्त्तेरन् आनुपूर्व्यमध्वर्य्यवे सिद्धं यथा व्यवायनम् ॥ ११ ॥

वेदेः पांशून् हरेयुस्तथोत्तरवेदेर्धिष्ण्येभ्यश्च † ॥ १२ ॥

वेद्यादीनामयनमशक्यं तत्र तेषामवयवा नीयन्ते वेदेरित्यपादानलक्षणा पञ्चमी तस्याः पांशून् गृहीत्वा नयेयुः यथा वेदेस्तथोत्तरवेदेः पांशून् हरेयुः धिष्ण्येभ्यश्च पांशून् हरेयुः ॥ १२ ॥

तान्निविश्य यथायतनं निवपेयुः † ॥ १३ ॥

तान् पांशून् निविश्य उपविश्य यथायतनं यद्यस्यायतनं तस्मिन्निवपेयुः ॥ १३ ॥

---

* आश्वलायनेनैतेन सूत्रद्वयं कृतम् ।

† आश्वलायनोऽप्येवम् ।

**उलूखलबुध्नो यूप इति पृथुबुध्नः स्यात्* ॥ १४ ॥**

उलूखलबुध्नोयूप इति ब्राह्मणं तत्कथमुलूखलबुध्न इत्युच्यते पृथुबुध्नः स्यात् पृथु विस्तारे विस्तीर्णबुध्नः स्यात् ॥ १४ ॥

**प्रकृष्य इति तं पूर्वं कर्षेयुरेवानुद्यच्छन्तः* ॥ १५ ॥**

यपः प्रकृष्य इति ब्राह्मणं यूपस्थानं सर्वेषां पूर्वं कर्षेयुः अनुद्यच्छन्तः अनुत्क्षिपन्तः एवशब्दः क्रियते कर्षेयुरेव नैनमुत्क्षिपेयुः यथा ग्रन्थान्तरे दृष्टः प्रकृष्य इत्यवस्थाने प्रकृष्यत आकृतिको ह्यत्यन्त इति आकृतिको भवतु मा वाभूत् प्रकृष्टच्च एव प्रकृष्य इति ब्राह्मणम् ॥ १५ ॥

**उपोप्त एवेत्यनिखातस्तिष्ठेत् पांशुभिः पर्युप्तः* ॥ १६ ॥**

उपोप्त एवेति ब्राह्मणं न निखातस्तिष्ठेत् उपोप्त एवेति पांशुभिः पर्य्युप्तः परिवेष्टितः ॥ १६ ॥

**नोपरवान् खनन्तीत्यधिषवणफलकयोरधस्तादुपरवानामम्बभ्रास्तेषां प्रतिषेध आलिखेयुरेवैनान्न खनेयुः † ॥ १७ ॥**

नोपरवान् खनन्तीति ब्राह्मणं ते उपरवाः कस्मिन् देशे इति उच्यते सोमस्याधिषवणार्थौ यौ फलकौ तयोरधस्ताद्भूमौ उपरवानामम्बभ्रा विद्यन्ते ग्वभ्रः खातः तेषामत्र प्रतिषेधः आलेखनमात्रमेवैषां कुर्य्युः न खनेयुः आलिखेयुरेनानित्येवमेव वक्तव्ये एवशब्दः

---

* आश्वलायनेऽप्येवम्।

† आश्वलायनेनैतेन सूत्रद्वयं कृतम्।

किमर्थं क्रियते न खनेयुरिति उच्यते अन्यत्रापि यत्रार्थतः खातो न स्यात् तत्र लेखनमात्रमेव स्यात् यथा साद्यःक्रेषु वैश्वदेवे चा-त्वालपांशुभिः प्रयोजनं नास्ति तत्राप्यालेखनमात्रं स्यादिति ॥ १७॥

इति दशमस्य पञ्चदशी कण्डिका ।

---

अथ षोडशी कण्डिका ।

तेषां पौर्णमास्यां गोष्टोमः स्तोमो भवतीति यजनीयेऽहनि स्यादित्याचार्याः सꣳस्थिते गोष्टोमे पौर्णमासमिति हि सꣳ-स्थानान्ताद्विदधाति* ॥ १ ॥

उक्तं ते तमापूर्य्यमाणमामावास्येन यन्ति तेषां पौर्णमास्यां गोष्टोमः स्तोमो भवत्युक्थो बृहत्सामा संस्थिते गोष्टोमे पौर्ण-मासं निर्वपन्त इति गोष्टोमसंस्थानन्तरं पौर्णमासस्य क्रियामादि-शति पौर्णमासस्य चापरपक्षादिः स्थानं तत्किं पौर्णमासकालवशेन यजनीयेऽहनि गोष्टोमोऽस्तु अथ प्रत्यक्षत्वात् पौर्णमास्यां गोष्टोमं कृत्वा तत्कालानन्तरं पौर्णमासं निरूप्यतामिति अतोऽर्थमाचार्य्यः परीक्षितुमारभते तेषां पौर्णमास्यां गोष्टोमः स्तोमो भवतीति स गोष्टोमो यजनीयेऽहनि स्यात् इत्येवमाचार्य्या मन्यन्ते किं कारणं यस्मात् संस्थानन्तरं पौर्णमासस्य क्रियां विधत्ते यस्त्वयं पौर्णमासी-शब्दस्तेषां पौर्णमास्यामिति अयं पौर्णमासीसन्निकृष्टे काले ॥ १ ॥

---

* आश्वलायनेनैतेन सूत्रत्रयं कृतम् ।

ते तमापूर्यमाणं तेतमपक्षीयमाणमिति च कृत्स्नवत्पक्षाभिधानम्* ॥ २ ॥

किञ्चान्यत् यदिदन्ते तमापूर्य्यमाणमामावास्येन यन्ति तेतमपक्षीयमाणं पौर्णमासेन यन्तीत्येतदभिधानं कृत्स्नौ पक्षावधिकृत्य कालाध्वनोरत्यन्तसंयोगे द्वितीयेति यदि त्वयं पौर्णमास्यां गोष्टोमं कुर्य्यादमावास्यायाञ्चायुष्टोमम् आमावास्यापौर्णमासाभ्यां कृत्स्नयोः पक्षयोर्व्याप्तिर्न स्यात् ॥ २ ॥

पर्वणि त्वेव स्यात्तेषां पौर्णमास्यां तेषाममावास्यायामिति हि प्रत्यक्षेण विदधाति † ॥ ३ ॥

तुशब्दः पूर्वपक्षनिवृत्त्यर्थः यदुक्तं यजनीयेऽहनि स्यादिति तन्न पर्वण्येव स्यात् एवशब्दोऽवधारणार्थः तेषां पौर्णमास्यान्तेषाममावास्यायामेवेति यस्मात् प्रत्यक्षेण विदधाति यदिदं यजनीयेऽहनीत्याचार्य्याणां वचनं कल्पनामात्रमिदम् अयन्त्वाद्यः प्रत्यक्षशेषः कल्पनामात्रेण शक्यं प्रत्यक्षं वचनं बाधितुं कल्पनावचनयोर्वचनस्य बलीयस्त्वात् वचनं हि श्रुतिः ॥ ३ ॥

कर्मानन्तर्यमात्रन्तु सꣳस्था दर्शपूर्णमासयोः* ॥ ४ ॥

संस्थिते गोष्टोमे पौर्णमासमिति यदुक्तन्नान्तरान्यत्कर्म प्रवर्त्तेत इत्येतदुक्तं भवति स्वे स्वे काल एव गोष्टोमः स्वे स्वे काल एव पौर्णमासः स्यात् वक्ष्यत्येतेनायुर्व्याख्यात इति तत्राऽप्येष एव विधिः स्यात् ॥ ४ ॥

* द्राह्यायणेऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

ते तमापूर्य्यमाणन्ते तमपक्षीयमाणमिति च यथा भूयसो वादः* ॥ ५ ॥

अथ यदुक्तन्ते तमापूर्य्यमाणन्ते तमपक्षीयमाणमिति च कृत्स्न-वत्पक्षाभिधानमिति अयं यथा भूयसोवादः गृह्यताम् असम्भवात् कृत्स्नभावस्य ॥ ५ ॥

सꣳस्थिते गोष्टोमे तदहरेव पौर्णमासेन हविषेष्ट्वो-द्युञ्जीरन्निति* ॥ ६ ॥

पर्वणि गोष्टोमं कृत्वा तस्मिन्नेवाहनि पौर्णमासेन हविषेष्ट्वा उद्-युञ्जीरन्निति उद्योगं कुर्य्युरिति तदहरेव प्रतिष्ठेरन्निति एवं संस्थान-न्तरं पौर्णमासं प्रयुक्तं भवतीति ॥ ६ ॥

अयजमानास्तत्रैव तां रात्रिं वसेयुरिति गौतमः* ॥ ७ ॥

गौतम आचार्य्य आह पर्वणि गोष्टोमेनेष्ट्वा अयजमानाः पौर्ण-मासेन तस्मिन्नेव देशे तां रात्रिं वसेयुरिति ॥ ७ ॥

उद्युञ्जीरन्नेवेति शाण्डिल्यः श्वोभूते तु यजेरन्* ॥ ८ ॥

शाण्डिल्य आचार्य्य आह इष्ट्वा पौर्णमास्यां गोष्टोमेन प्रति-तिष्ठेरन्नेव श्वो भूते तु पौर्णमासेन यजेरन् एवं पौर्णमासं स्वे स्थाने कृतं भवति ॥ ८ ॥

एतेनायुर्व्याख्यातः* ॥ ९ ॥

---

* द्राह्यायणोऽप्येवम् ।

एतेन मवा आयुर्व्याख्यातः यजनीयेऽहनि स्यात् पर्वणि स्यादित्ये-
तदादिना ॥ ९ ॥

**तत्र धानञ्जप्येनामावास्यायाꣳसायन्दोहं दोहयेरन् पुरा प्रातरनुवाकात्प्रातर्दोहम्* ॥ १० ॥**

तत्र तस्मिन् कर्मणि धानञ्जप्येन विधानेनातिरात्रे क्रियमाणे अमावास्यायां यजनीयेऽहन्यतिरात्रः स्यादिति तत्र तस्मिन्नमावा-
स्यायां सायन्दोहं दोहयेरन् पूर्वमतिरात्रस्य प्रातरनुवाकात् प्रात-
र्दोहं ततः संस्थितेऽतिरात्रे सान्नाय्येन यजेरन् ॥ १० ॥

**अतिचिरमेवं दुग्धꣳसान्नाय्यन्तिष्ठेदिति शाण्डिल्या-
यन इतरयोरेवान्यतरत् कुर्य्युरिति † ॥ ११ ॥**

शाण्डिल्यायन आचार्य्य आह एवं क्रियमाणे यद्यमावास्यायां सान्नाय्यं क्रियते द्वितीयायाञ्च यागः अतिचिरं सान्नाय्यं दुग्धमव-
तिष्ठेदिति तस्मादितरयोरेव गो आयुषोर्यजनीयेऽहनि पर्वणि चेत्ये-
तयोर्विधानयोरन्यतरत् कुर्य्युरिति अतिरात्रस्त्वमावास्यायामेव स्या-
दिति ॥ ११ ॥

**कौण्डपायिने भोजनमुक्तमिष्ट्ययनेषु दर्शपूर्णमासधर्मा-
श्च † ॥ १२ ॥**

इष्ट्ययनेषु कौण्डपायिने सत्रे भोजनमुक्तं हविष्यम् इष्ट्ययनेषूपा-

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

पद्येयुरिति दर्शपूर्णमासधर्माश्च कौण्डपायिन एवोक्ताः अमावास्येन पूर्वपक्षमितरं पौर्णमासेनेत्यादयः ॥ १२ ॥

चन्द्रप्रमाणा त्वेव पर्वसु स्युः* ॥ १३ ॥

प्रमाणं एवं पर्वसु कौण्डपायिने हि चिंशिनो मासाविहिताः इह चन्द्रप्रमाणा एवेति ॥ १३ ॥

इति दशमस्य षोडशी कण्डिका ।

---

अथ सप्तदशी कण्डिका ।

दृषद्वत्या अप्यये ऽपोनप्त्रीयामिष्टिं निर्वपेरन्यदि सोदका स्यात्* ॥ १ ॥

उक्तं दृषद्वत्या अप्यये ऽपोनप्त्रीयं चरुं निरुप्यायातियन्तीति तत्र कृणा इष्टिश्चोद्यते दृषद्वत्या नद्या अप्ययः सरस्वत्यासङ्गम एकीभावस्तस्मिन्नप्यये ऽपोनप्त्रीयामिष्टिं निर्वपेरन् अपोनप्ता देवता अस्या इत्यपोनप्त्रीया निर्वपत्यालभते यजतयः प्रधानशब्दास्तत्र प्रवर्त्तकाः निर्वपतिशब्देनेष्टिश्चोद्यते यदि तस्मिन् देशे सोदका स्याद्दृषद्वती ॥ १ ॥

अप्यनुदकायामिति धानञ्जय्यः* ॥ २ ॥

धानञ्जय्य आचार्य्य आह अनुदकायामपि निर्वपेरन् श्रुतिसामर्थ्यात् ॥ २ ॥

---

* द्राह्मायणोऽप्येवम् ।

शते गोष्वृषभमप्यृजन्तीति वत्सतरी शते गर्भिणीषु* ॥३॥

शते गोष्वित्यादि ब्राह्मणं शते गोष्वृषभं मिश्रयन्ति तासां वयः उच्यते वत्सतरी शते गर्भिणीषु वत्सभावादुत्तीर्णा वत्सतर्य्यः अयमेतासां वत्सत्वं बहुगोत्वं वत्सेभ्यश्चर्षभेभ्यश्च तनुत्वइति टरच् प्रथमगर्भास्वास्वित्येतदुक्तं भवति ॥ ३ ॥

ता यत्र गव्यमभयꣳस्यात्तत्र रक्षेयुः* ॥ ४ ॥

ता गावो यस्मिन् देशे गव्यं तृणोदकमभयं स्यात् गोभ्योहितं गव्यम् अभयं यत्र भयं न स्यात् व्याघ्रचौरादिभ्य एतस्मिन् देशे एता रक्षेयुः गोपाः ॥ ४ ॥

पुङ्गवैस्तासां भुञ्जीरन् सर्पिषा च* ॥ ५ ॥

ये तासाङ्गवां पुङ्गवा उत्पद्येरंस्तैर्भुञ्जीरन् सत्रिणः यत्किञ्चिद्‌-आद्यम् उपार्जयितव्यं स्यात् तैः पुङ्गवैस्तदर्जयेरन् ते तत्र निमित्त-भूताः, अपरे ब्रूवते ये तत्र पुङ्गवास्तेषां मातृदुग्ध्वा तेन क्षीरेण भुञ्जी-रन् दध्नावा याः स्त्रियस्तासां मातरो न दोग्धव्याः एवं वर्द्धमाना क्षिप्रं सहस्रं सम्पद्यते एष एवमुख्यार्थः, अपरे ब्रूवते आलभ्यास्ते पुङ्गवा इति तैश्च पुङ्गवैर्भुञ्जीरन् सर्पिषा च ॥ ५ ॥

तासु सहस्रꣳसम्पन्नासु पूर्वपक्षे गामतिरात्रं कृत्वा दत्त्वै-ताउत्तिष्ठेयुः* ॥ ६ ॥

उक्तं यदा सहस्रं सम्पद्यतेऽथोत्थानं यदा सर्वज्यानिञ्जीयन्ते

---

* द्राह्यायणोऽप्येवम्।

अथोत्थानं यदा गृहपतिर्म्रियते अथोत्थानं यदा अन्नं प्रास्रवण-मागच्छन्त्यथोत्थानमिति एतान्येवोत्थाननिमित्तान्युक्तानि तचेदन्तावत् प्रथममुत्थानं तासु गोषु सहस्रं संख्यातः सम्पन्नासु मासस्य यः पूर्वपक्षस्तस्मिन् गामतिरात्रसंस्थानं कृत्वा दत्त्वा एनागाः उत्तिष्ठेयुः यस्मै देयास्तदुपरिष्टाद्वक्ष्यते ॥ ६ ॥

यदा सर्वज्यानिर्ज्जीयन्त इति तासामेवाधिकारः प्रकरण-भूतत्वात्तत्र विश्वजिदतिरात्रः* ॥ ७ ॥

तद्यदा सर्वज्यानिमिति किं सत्रिणो यथा सर्वज्यानिर्ज्जीयन्ते अथान्य इत्यचाह तासामेवाधिकारः प्रकरणभूतत्वात् तस्मिन् हि प्रकरणे तस्मिन्नुत्थाने विश्वजिदतिरात्रः स्यात् ॥ ७ ॥

मृते गृहपतावायुः † ॥ ८ ॥

मृते गृहपतौ आयुः स्यात् अतिरात्र इति प्रकृतम् ॥ ८ ॥

प्रादुर्भावान्तादेतयोरापदोरुत्तिष्ठेयुरप्यपरपक्षे † ॥ ९ ॥

एतयोरापदोः सर्वज्यानिगृहपतिमरणयोः प्रादुर्भावसमकाल-मेवोत्तिष्ठेयुः न पूर्वपक्षमाद्रियेरन् अपरपक्षेऽप्युत्तिष्ठेयुः ॥ ९ ॥

न सकृच्चन सरस्वत्यामवभृथमभ्यवेयुर्देवयजनभूता ह्येषा भवति † ॥ १० ॥

सकृदपि सरस्वत्यामवभृथनाभ्यवेयुः ॥ १० ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

**अविद्यमाने सरस्वत्या एवोद्धारं पार्श्वतस्तु* ॥ ११ ॥**

अविद्यमानेऽन्यत्रोदके सरस्वत्या एवोद्धारं कुर्य्यात् पार्श्वतस्तु तस्या एव न दूरे ॥ ११ ॥

**यदा प्लक्षं प्रास्रवणमागच्छन्त्यथोत्थानमिति तथा प्रास्येयुर्यथैनं पूर्वपक्ष आगच्छेयुरिति गौतमः † ॥ १२ ॥**

प्रस्रवणे भवं प्रास्रवणं यदि तावद्दूरे स्यात् प्लक्षः सन्निकृष्टस्य पूर्वपक्षः तदा तेन क्रमेण प्रास्येयुर्यथा पूर्वपक्षे आगच्छेयुरिति गौतम आचार्य्य आह ॥ १२ ॥

**यदेनात्किञ्चिदुत्थानमागच्छेदिति धानञ्जप्यः प्रायणीयमेवातिरात्रमुपेत्योत्तिष्ठेयुरिति* ॥ १३ ॥**

धानञ्जप्य आचार्य्य आह चतुर्णामुत्थानानां यदेनात् सत्रिणः किञ्चिदुत्थानमागच्छेत् प्रायणीयमेवातिरात्रं ज्योतिष्टोमं कृत्वोत्तिष्ठेयुः आद्यन्तसमाप्त्यर्थं नैव गवादीन् कुर्य्यादिति ॥ १३ ॥

**प्लक्षं प्रास्रवणमागम्य पुरस्तादतिरात्रस्याग्नये कामायेष्टिः स्यादिति शाण्डिल्यः* ॥ १४ ॥**

उक्तं प्लक्षं प्रास्रवणमागच्छन्तीति तत् प्लक्षं प्रास्रवणमागम्याग्नये कामायेष्टिः पुरस्तादतिरात्रस्य स्यादित्येवं शाण्डिल्य आचार्य्यो मन्यते ॥ १४ ॥

---

* शाङ्खायनोऽप्येवम् ।

† शाङ्खायनेनैतेन सूत्रद्वयं कृतम् ।

उपरिष्टादिति धानञ्जप्यः* ॥ १५ ॥

धानञ्जप्य आचार्य्य आह इष्टिः उपरिष्टादतिरात्रस्य स्यादिति ततोऽप्याहावभृथम् ॥ १५ ॥

तस्यामश्वाश्च पुरुषोश्च धेनुके यज्ञोपकरणशेषाᳬश्चाभिरूपायान्यस्मै दद्युः* ॥ १६ ॥

तस्यामश्वाश्च पुरुषोश्च धेनुके दत्तेति तस्यामिष्टौ अश्वाश्च पुरुषोश्च धेनुके यज्ञोपकरणशेषभूतांश्च अभिरूपाय विद्यादिगुणयुक्तायान्यस्मै ब्राह्मणाय दत्वा उत्तिष्ठेयुः ॥ १६ ॥

स्वामिनो हि सर्वे सत्रेषु तेषां प्रतिग्रहं न विद्यते* ॥ १७ ॥

कस्मादन्यस्मै दद्युः यस्मात् सत्रेषु सर्वे स्वामिनस्तेषां प्रतिग्रहं न विद्यते विधानं किमर्थमिति चेत् अन्यस्मै दद्युरिति उच्यते अन्या अपि याः काश्चिदङ्गदक्षिणा नैमित्तिन्यः कर्त्तृसंयुक्ताः सत्रेष्वागच्छेयुः ता अप्यन्यस्मा एव दद्युः ॥ १७ ॥

उक्तोऽवभृथो ब्राह्मणेन* ॥ १८ ॥

अवभृथ उक्तो ब्राह्मणेन कारपचवं प्रति यमुनावभृथमभ्यवयन्तीति ॥ १८ ॥

अपृष्टशमनीयमेतत्* ॥ १९ ॥

एतत् सत्रं सारस्वतम् अपृष्टशमनीयम् अथ कस्मादयमप्राप्तप्रतिषेधः क्रियते यदा नैव कश्चित् पृष्ठशमनीयः सत्रेष्वभिहितः

* द्राह्यायणोऽप्येवम् ।

अथापि दृष्ट प्रतिषेधेऽन्यत्र प्राप्तिं दर्शयति श्रुत्यन्तरदृष्टत्वात् तस्माद्-दवसानीयज्योतिष्टोमेन अग्निष्टोमेन रथन्तरपृष्ठेन सहस्रदक्षिणेन पृष्ठ-शमनीयेन च यजेतेति ॥ १९ ॥

इति दशमस्य सप्तदशी कण्डिका ।

---

अथ अष्टादशी कण्डिका ।

एतेनैवोत्तरे व्याख्याते* ॥ १ ॥

एतेनैव उत्तरे सारस्वते व्याख्याते तयोः पूर्वस्मिन् पठति अति-रात्रस्त्रिवृत्पञ्चदशमित्यादि परत्र त्रिरात्रो ज्योतिर्गौरायुस्त्र्यह इत्या-दि दर्शपौर्णमासिकानां हविषामेभिस्त्रिवृत्पञ्चदशत्रिकद्रुकैः प्रत्याङ्ग-रन्यत्सर्वमेतेनैव व्याख्यातमुत्तरयोः दक्षिणे तीरे सरस्वत्या विनशनस्य दीक्षेरन् सारस्वतायेत्यारभ्य ॥ १ ॥

तत्राग्नये कामायेष्टिरपोनप्त्रीया च स्रुवहोमौ स्याताम्* ॥ २ ॥

तद्देवत्यौ ॥ २ ॥

इष्टिरेवाग्नये कामायोपरिष्टाच्चेदतिरात्रस्येति शाण्डि-ल्यः* ॥ ३ ॥

प्रथमे अग्नये कामायेष्टिः पुरस्तादतिरात्रस्य उपरिष्टाद्वे विभा-

---

* द्राह्यायणोऽप्येवम् ।

चितं तत्र शाण्डिल्य आचार्य आह यद्युपरिष्टादतिरात्रस्य स्यादिष्टि-
रेवाग्नये कामाय स्यान्न सुवर्होमाविति ॥ ३ ॥

पर्वणोरिन्द्रकुक्षी* ॥ ४ ॥

उक्तौ ज्योतिरायुषी इन्द्रकुक्षी विश्वजिदभिजितावुन्द्रकुक्षी इति
ताविन्द्रकुक्षी पर्वणोः स्यातां तयोर्हि पूर्वस्मिंस्थाने दृष्टा इन्द्रकुक्षी
इति संज्ञा इन्द्रकुक्षी काले तु वदति तत इन्द्रकुक्षीति चोक्तम् ॥ ४ ॥

पूर्वस्याग्निष्टोमौ त्रिवृतौ राथन्तरबार्हते पूर्वपक्षउक्थ्ये
पञ्चदशे राथन्तरबार्हते अपरपक्ष इति गौतमः* ॥ ५ ॥

ये अधिकृते तयोः सामान्यो विधिरुक्तः साम्प्रतं पूर्वस्मिंस्ताव-
द्विशेष उच्यते उत्तरयोः सारस्वतयोः पूर्वस्य त्रिवृती अहनी राथ-
न्तरबार्हते अग्निष्टोमसंस्थे स्यातां पूर्वपक्षे उक्थ्यसंस्थे पञ्चदशे राथ-
न्तरबार्हते अपरपक्षे इति गौतम आचार्य आह ॥ ५ ॥

ते न पक्षयोः सञ्चारयेत्* ॥ ६ ॥

ते अहनी न पक्षयोः सञ्चारयेत् तयोः पक्षव्यत्यासप्रयोगे ॥ ६ ॥

सर्वत्र त्वेव त्रिवृत्पञ्चदशे व्यत्यासꣳ स्याताम्* ॥ ७ ॥

सर्वत्र त्वेव पूर्वपक्षे अपरपक्षे च त्रिवृत्पञ्चदशे एव व्यत्यासं
स्याताम् ॥ ७ ॥

तयोर्यस्मिन्ननुपेते पर्वागच्छेत्तेनोत्तरं पक्षमुपक्रमेत* ॥८॥

तयोस्त्रिवृत्पञ्चदशयोर्यस्मिन् अनुपेते असंस्कृते पर्वागच्छेत् चा-

* द्राह्यायणेऽप्येवम् ।

न्यूनमेव तेनोत्तरं पक्षमारभेत उक्तं हि चन्द्रप्रमाणाश्चैव पर्वणः स्युरिति ॥ ८ ॥

एतेनोक्तमुत्तरस्य त्रिकद्रुकेषु* ॥ ९ ॥

एतेनोक्तं विधानमुत्तरस्य सारस्वतस्य त्रिकद्रुकेषु यस्मिन् न संस्क्रते पर्वागच्छेत् तेनोत्तरं पक्षमुपक्रमेतेति ॥ ९ ॥

दार्षद्वतनैरयोर्व्रतानि* ॥ १० ॥

अनन्तरं दार्षद्वततौरे पठति तयोः सामान्यतो विधानमुच्यते दार्षद्वतस्य तौरस्य तयोर्व्रतानि वक्ष्यन्त इति वाक्यशेषः व्रतानि नियमाः ॥ १० ॥

तिष्ठेद्दिवासीत नक्तं हविरुच्छिष्टभोजी स्यादधःसंवेश्य-मांसाम्ललवणाशी न स्त्रियमुपेयाद्यथा प्रकृत्याचिताग्निवृत्तिं वर्तयेत् † ॥ ११ ॥

तिष्ठेद्दिवासीत नक्तं न संविशेत् आगतिनिवृत्तौ नक्तं रात्रावासीत उपविशेत नापि संविशेत् हविरुच्छिष्टभोजी स्यात् अधःसंवेशी अधःसंविशेत् न खमायां भूमावित्यर्थः अमांसाम्ललवणाशी न मांसमश्नीयात् न लवणमिति ‡ कुतः पुनः संशय उच्यते न पुनः प्रवृत्तिरुपरिसंवेशनस्य मांसलवणभोजनस्य च येनायं प्रतिषेधः क्रियते यावता उक्तं तिष्ठेद्दिवासीत नक्तं हविरुच्छिष्टभोजी स्यादिति तदिद-

---

* दाह्यायणेऽप्येवम्।

† दाह्यायणेनैतेन षट् सूत्राणि क्रतानि।

‡ अत्र पतितमनुमीयते।

मनर्थकं तस्मात् न वक्तव्यम् उच्यमाने वा प्रयोजनं वक्तव्यम् उच्यते आरब्धव्यमेव उक्तं हि संवत्सरं ब्राह्मणस्य गारक्षेत् संवत्सरं व्यर्णे-नैतन्धवेऽग्निमिन्धीत संवत्सरे परोक्षमग्नेनादधीतेति तद्गोपालाग्नी-न्धनयोरेतन्न सम्भवति गाः पालयतः स्थानासनं सम्भवति अग्नी-न्धने प्रागन्याधानाद्भविषोऽभावाद्भविरुच्छिष्टभोजित्वं न सम्भवति एतस्मात् कारणादारब्धव्यमिदमनेन नियमो यथा सम्भवति स्त्रिय-न्नोपेयात् मैथुनधर्मेणेति कुतो वा प्रवृत्तिः तचाह वक्ष्यत्ययं यथा प्रकृत्याहिताग्निवृत्तिं वर्त्तयेदिति तस्यां वृत्तावेतत् प्रकृतमृतावुपेया-दिति तत् प्रतिषिध्यते यथा प्रकृति आहिताग्नेर्या प्रकृतवृत्तिः तां वर्त्तयेत् अग्निहोत्रदर्शपूर्णमासानां कर्मणामनुष्ठानं कुर्य्यात् दार्ष-द्वतगौरयोः सामान्यानि व्रतान्युक्तानि साम्प्रतं दार्षद्वतगौरयोर्यो विधिः स उच्यते ॥ ११ ॥

दार्षद्वते संवत्सरं ब्राह्मणस्य गारक्षेदित्यृत्विज आचार्य्य-स्य वा* ॥ १२ ॥

दार्षद्वते पठति संवत्सरं ब्राह्मणस्य गा रक्षेदिति तत्रायस्य ब्राह्म-णस्य ऋत्विक् स्यात् आचार्य्यो वा तस्य गा रक्षेत् न यस्य कस्यचिद्ब्राह्म-णस्य ऋत्विगाचार्य्यावुक्तलक्षणौ एतौ हि ऋत्विगाचार्य्यौ स्वामिनाव-विचालिनौ ॥ १२ ॥

नैतन्धवाना मार्माः सरस्वत्यां तेषामेको व्यर्णस्तस्मिन् सं-वत्सरमग्निमिन्धीत यैकाग्नेः परिचर्य्या मया* ॥ १३ ॥

---

* आह्यायणोऽप्येवम् ।

उक्तं संवत्सरं व्यर्णे नैतन्धवेऽग्निमिन्धीतेति नैतन्धवाना मार्माः सरस्वत्यां मार्मा ह्रदाः तेषामेको व्यर्णः अर्ण इत्युदकनाम विगतोदकः तस्मिन् व्यर्णे ह्रदे संवत्सरमग्निमिन्धीत ज्वलन्ती दीप्ता केन न्यायेन या एकाग्नेः परिचर्य्योक्ता ॥ १३ ॥

**अग्निहोत्रमेव जुह्वत् पुरस्ताच्चेदाहिताग्निः* ॥ १४ ॥**

यदि पुरस्तादाहिताग्निः स्यात् ततस्तस्मिन् व्यर्णे नैतन्धवे मार्मे अग्निहोत्रमेव जुह्वत्संवत्सरमेवासीत तदेव स्यादग्नीन्धनम् ॥ १४ ॥

इति दशमस्य अष्टादशी कण्डिका ।

---

अथ ऊनविंशी कण्डिका ।

**संवत्सरादूर्द्ध्वं परीणं नाम स्थली कुरुक्षेत्रे तस्यामग्नीनाधाय यथाकालमन्वारम्भणीययेष्ट्वा प्रव्रज्येतेति शाण्डिल्यः* ॥ १ ॥**

उक्तं संवत्सरे परीणह्यग्नीनादधीतेति संवत्सरमग्निमिन्धित्वा तस्मादूर्द्ध्वं परीणह्यग्नीनादधीत परीणहीति देशश्रुतिः परीणं नाम स्थली कुरुक्षेत्रे भूमेरुन्नतप्रदेशः तस्यां स्थल्यामग्नीनाधाय यथाकालमन्वारम्भणीयो यः कालः तस्मिन्नेव एतयेष्ट्वा प्रव्रज्येतेति शाण्डिल्य आचार्य्य आह ॥ १ ॥

**दर्शपूर्णमासाभ्यां यजेतेति धानञ्जय्यः* ॥ २ ॥**

---

* द्राह्यायणोऽप्येवम् ।

धानञ्चाथ आचार्य्य आह अग्न्याधानं कृत्वा तस्मिन्नेव देशे यथा-कालमन्वारम्भणीययेष्ट्वा दर्शपूर्णमासाभ्यां यजेतेति ॥ २ ॥

**सायं प्रातराहुतीएव हुत्वा पुरस्ताच्चेदाहिताग्निः* ॥ ३ ॥**

अथ यदि पुरस्तादाहिताग्निः सायं प्रातराहुती एव हुत्वा प्रव्रज्येतेति ॥ ३ ॥

**सरस्वतीदृषद्वत्योः सम्भेदं प्राप्याग्नेयेनाष्टाकपालेन यष्टु-मुपक्रमेत* ॥ ४ ॥**

आह्मणं सदच्चिणेन तीरेण दृषद्वत्या आग्नेयेनाष्टाकपालेन अम्या परासीयादिति तत्सरस्वतीदृषद्वत्योः सम्भेदं सङ्गमं प्राप्याग्नेयेन पुरो-डाशेनाष्टाकपालेन यष्टुमुपक्रमेत उपक्रम आरम्भः ॥ ४ ॥

**तत्र शम्याप्रासनं यथा सारस्वतेषु* ॥ ५ ॥**

तत्र तस्मिन् कर्मणि अष्टाकपालेन यागेन शम्याप्रासनं शम्या-प्रक्षेपः येन प्रकारेण सारस्वतेषु आहवनीयमन्वन्तेनेत्यादिना ॥ ५ ॥

**नतु प्रक्रमात् प्रक्रामेत्* ॥ ६ ॥**

न त्विह प्रक्रमात् प्रक्रामेत् यथा सारस्वतेषु तत्र हि सौमिक-ञ्चैत्याहवनीयम् इह पुनरैष्टिकं तस्मादिह प्रक्रमात् न प्रक्रामेत् ॥६॥

**काममनेकामिष्टिमेकैकेनाह्ना सᳲस्थापयेत्* ॥ ७ ॥**

इह काममिष्टितः अनेकमिष्टिमेकैकेनाह्ना संस्थापयेत् कुर्य्यात् विप्रकृत्य ॥ ७ ॥

---

* द्राह्यायणोऽप्येवम् ।

दृषद्वत्या दक्षिणेन तीरेणेयात्* ॥ ८ ॥

दृषद्वत्या दक्षिणेन कूलेन इयाद्गच्छेत् अस्याप्राप्तेः ॥ ८ ॥

तस्याः प्रभव्यमम्यं प्राप्यैतयेष्ट्येष्ट्वा त्रिप्लक्षावहरणं प्रति यमुनामवभृथमभ्यवेयात्* ॥ ९ ॥

उक्तं त्रिप्लक्षान् प्रति यमुनामवभृथमभ्यवैतीति तदेव मनुष्येभ्यस्तिरो भवतीति तस्या दृषद्वत्याः प्रभव्यमम्यं प्राप्य यस्माद्देशा प्रभवति प्रायात् तं प्राप्यैतयेष्ट्वा आग्नेयेनाष्टाकपालेन त्रिप्लक्षावहरणं देशं प्रति यमुनामवभृथमभ्यवेयात् त्रिप्लक्षान् प्रतीति ब्राह्मणं ते प्लक्षा न ज्ञायन्ते कस्मिन् काले अवहृता इति आगमेन त्वविच्छिन्नेन पारम्पर्य्यणादौ विज्ञायन्ते तस्मात् सूत्रकार एवं कल्पयति ॥ ९ ॥

यत्र क्व च ततो दूरे यमुना स्यात् तत्रैतयेष्ट्वेष्ट्वा स्वयᳪ साम गायन्नवभृथमभ्यवेयादगायन्वा † ॥ १० ॥

यदि तस्माद्देशाद्यमुना दूरे स्यात् तस्मिन् कस्मिंश्चिद्देशे एतयेष्ट्वा स्वयं साम गायन्नवभृथमभ्यवेयादित्यर्थादवगम्यते स्वयमिति उच्यते एतद्धि अवभृथसाम ऋत्विक्कर्त्तृकं तदनेन लिङ्गेनाद्रियेतापि ऋत्विग्गानार्थम् एवमादित आरभ्य स्वयमिति अथवा स्वयं साम गायतीति असंप्रेषितो गायेत् अगायन्वा अभ्यवेयादवभृथम् ॥ १० ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम्।

† द्राह्यायणेनैतेन चत्वारि सूत्राणि कृतानि।

**प्रव्रजिष्यतोऽयनमिदं मन्य इति धानञ्जय्यस्तदेव मनुष्येभ्यस्तिरोभवतीति* ॥ ११ ॥**

इदं दार्षद्वतमयनं प्रव्रजिष्यत एवं मन्य इति धानञ्जय्यस्तदेव मनुष्येभ्यस्तिरो भवतीति एष तिरोभावस्तस्य यन्नित्यमरण्ये वसन्मनुष्यैर्दृश्यते ॥ ११ ॥

**न ग्रामं पुनरेयादितीव † ॥ १२ ॥**

एवमिव हि तद्ब्राह्मणं भवति ॥ १२ ॥

**स्वर्गं लोकमाक्रमते ‡ ॥ १३ ॥**

अथ क्रियाफलमिदमुच्यते अनेन कर्मणा स्वर्गं लोकमाक्रमते ततो मनुष्येभ्यस्तिरोभूतो भवति न मनुष्यैरुपलभ्यते ॥ १३ ॥

**व्यावर्तते श्रेयान् भवतीति वा ‡ ॥ १४ ॥**

अथवा व्यावर्त्तत एवासौ मनुष्येभ्यः नासौ मनुष्यैस्तुल्यो भवति श्रेयान् भवति किं पुनर्मनुष्येभ्यः श्रेयः ब्रह्मप्राप्तिः ब्रह्म प्राप्नोतीत्यनेन कर्मणा अपवृज्यत इत्यर्थः अयमात्यन्तिकस्तिरोभावः ॥ १४ ॥

**उदकान्तर्द्धानाद्वा यथा सरजस इति* ॥ १५ ॥**

अथवा तिरोभाव उदकान्तर्द्धानात् यदासौ अवभृथमभ्यवैत्यप्सु निमज्जति तदासावन्तर्हितो भवति न दृश्यते तस्मादुदकान्तर्द्धानात्

---

* द्राह्यायणेनैतेन सूत्रदयं कृतम् ।

† द्राह्यायणीये एतन्नास्ति ।

‡ द्राह्यायणोऽप्येवम् ।

तिरोभवति यथा सरजस इति दृष्टान्त उपादीयते यथा सरजसेऽ-
हनि मनुष्यलोकाद्दिवेनमन्तर्दधातीति कुशपुटैरुपयन्तीति ॥ १५ ॥

इति दशमस्य एकोनविंशी कण्डिका ।

---

अथ विंशी कण्डिका ।

संवत्सरमहरहस्तौरेण यजेत* ॥ १ ॥

इह ब्राह्मणमाग्नेयोऽष्टाकपाल ऐन्द्र एकादशकपालो वैश्वदेवश्चरु-
रित्येतद्दाशमनुक्रम्याह एतेन वै तुरो देवमुनिः सर्वामृद्धिमार्ध्नोत्
सर्वामृद्धिमृध्नोति य एतदुपैतीति आग्नेयोऽष्टाकपाल इत्यादिप्रधानत्वं
चोदितं नाप्यभ्यासश्चोदितो नापि कालनियमः अतः सोऽयमा-
चार्य्यो लिङ्गं दृष्ट्वा एतेन वै तुरोदेवमुनिः स सर्वामृद्धिमाध्नोत्
सर्वामृद्धिमृध्नोति य एतदुपैति सांवत्सरिकं सत्रायणमुपैतीति संवत्सर-
महरहस्तौरेण यजेतेति संवत्सरमिति कालनियमः अहरहरित्यभ्यास-
श्चोद्यते तौरेणेति करणलक्षणा तृतीया यजेतेति क्रियोपदेशः अयं
सूत्रार्थः यदेतदैष्टिकं विधानं वक्ष्यति अनेनाहरहः संवत्सरं यजे-
तेति ॥ १ ॥

षष्ठ्यां चैत्रीपक्षस्य पञ्चम्यामिति गौतमो व्रतोपायनीय-
मोदनमशित्वा केशश्मश्रूणि वापयित्वाहतं वसनं परिधाय
परिसमुह्याग्नीन् परिस्तीर्य्य प्रणीताः प्रणीय मेखलामाबध्य

---

* द्राह्यायणोऽप्येवम् ।

दण्डं पाणौ कृत्वा पश्चाद्गार्हपत्यस्योपविश्य स्वयं कृष्णाजिनं प्रतिषजेत तूष्णीम्* ॥ २ ॥

षष्ठ्यां तिथौ चैत्रोपचस्य चित्राभियुक्ता पौर्णमासी चैत्री यदेतत् कर्म वक्ष्यते एतत् षष्ठ्यां चैत्रीपचस्यारभ्य कुर्य्यात् पञ्चम्यामिति गौतम आचार्य्य आह पञ्चम्यां चैत्रीपचस्य व्रतोपायनीयमोदनमशित्वा ओदनं भुक्त्वा व्रतमुपैति येन तं व्रतोपायनीयमोदनमौपवसथिकं हविष्यमन्नं भुक्त्वा केशान् श्मश्रूणि च वापयित्वा अहतं वसनं परिधाय तान्तुकमनिर्णिक्तमप्रावृतपूर्वं तद्वसनं परिधाय परिसमुह्याग्नीन् परिस्तीर्य्य त्रेताग्नीनां परिस्तरणमाध्वर्य्यवे सिद्धं प्रणीताः प्रणीय प्रणीतासंज्ञा मन्त्रसंस्कृता आपः मेखलामाबध्य मेहनस्य खलस्य माला मेखला अधरोत्तरकायविभागार्था रशनेत्यर्थः मुञ्जादीनां द्रव्याणां एकेन निर्वृत्ता दण्डं पाणौ कृत्वा पालाशादीनां यज्ञीयानां वृक्षाणामेकस्यावयवभूतं गार्हपत्यस्य पश्चिमे प्रदेशे उपविश्य स्वयं कृष्णाजिनं प्रतिषजेत तूष्णीं कृष्णमृगस्य चर्म कृष्णाजिनं तत् स्वयं स्कन्धे प्रतिषजेत अदत्तमध्वर्य्युणा एतदाध्वर्य्यवं तद्वचनात् स्वयं भवतीति अदीक्षितः कृष्णाजिनं प्रतिमुञ्चेत इति तूष्णीमिति मन्त्रपाधस्ताद्दर्शनं दृष्टं तस्य प्रतिषेधः ॥ २ ॥

पश्चिमेनाहवनीयं दक्षिणातिक्रम्यैतत् कुर्य्यात् † ॥ ३ ॥

किन्तु पश्चाद्गार्हपत्यस्योपविश्येति यदुक्तं तस्यायं विकल्पः ॥३॥

---

* कात्यायनेनैतेन सूत्रत्रयं कृतं तथा विशेषश्च कृतः।

† कात्यायनोऽप्येवम्।

तस्य तिस्र इष्टयः पूर्वास्व एका पृथक् च मध्यन्दिनापरा-ह्णयोः* ॥ ४ ॥

तस्य तिस्र इष्टयः सोमसंस्था विकृतं गवामयनं सर्पसत्रं स्यादित्येके आचार्य्या ब्रुवते ॥ ४ ॥

सतास्तु पृथगनुपूर्वꣳ सत्रोऽपि यान्युक्तानि ब्राह्मणेन* ॥५॥

अष्टाकपालः एकादशकपालश्चरुः ब्राह्मणोक्तमेतत् सर्वं वक्ष्यमाणविशेषविधानार्थम् ॥ ५ ॥

एका वैव स्यात्तस्यां तानि सर्वाणि स्युः* ॥ ६ ॥

कालत्रयविहितहविःष्वेकैवेष्टिः न तिस्रः ॥ ६ ॥

संवत्सरादूर्द्ध्वमवभृथमभ्यवेयात्तत्र सामगानं यथापूर्वस्मिन्* ॥ ७ ॥

स्वयं गायेन्न वा गायेदिति ॥ ७ ॥

उभयोस्त्ववभृथादुदेत्य यत् पुरस्तादिष्टमयनं तेनेष्ट्वा सोमेन यजेत* ॥ ८ ॥

प्रकृतत्वादुभयोर्दार्षद्वततैरस्योरवभृथोत्तरकालमाग्नेयादिभिरिष्ट्वा सोमेनाग्निष्टोमेन प्रयोगः ॥ ८ ॥

यावन्ति वा सत्रोऽपि पुरस्तात्तावद्भिर्वा पशुभिस्तद्देवत्यैः* ॥ ९ ॥

---

* आम्नायश्चोऽप्येवम्।

तद्देवत्यैः पशुभिः सामर्थ्यात् मन्त्रवर्णविकारः ॥ ९ ॥

षण्डकुषण्डावभिगरापगराविति च्याचेति* ॥ १० ॥

सर्वो द्व्यद्व्यीति सोमो विहृतः अग्निष्टोममेव इति संस्था-विकारः शेषं समानं गवामयनेन अभिगरापगरयोः कृतत्वात् ॥१०॥

प्रत्यक्षविहितं त्वार्षेयकल्पेन तत्रानुमानं न विद्यते † ॥११॥

प्रत्यक्षविहितमेतदार्षेयकल्पेन सर्पसत्रं तत्र तस्मिन्ननुमानं न वि-द्यते परं नः प्रमाणमार्षेयकल्पे तेन चेदं प्रत्यक्षमुक्तसंश्रयं विहितं न च शक्यं प्रत्यक्षविहितमनुमानेन प्रत्याख्यातुं विकल्पयितुं वा तद्यथा-र्षेयकल्पेन कृतं तथैव स्यात् किन्तु ॥ ११ ॥

अभिगरापगरावेवोपोत्तमेऽहनि स्याताम् † ॥ १२ ॥

अभिगरापगरावेव सर्पसत्रस्योत्तमेऽहनि भवेतां तद्धि व्रतस्था-नीयमुपोत्तममहः ॥ १२ ॥

पौर्णमासीप्रसवं त्रिसंवत्सरम † ॥ १३ ॥

पठति गवामयनं प्रथमः संवत्सरोऽथादित्यानामथाङ्गिरसामिति तस्य त्रिसंवत्सरस्य पौर्णमास्यां प्रसवः स्यात् तथोपपादयेरन् यथा पौर्णमास्यां प्रसवो भवति ॥ १३ ॥

तस्य याथाकामी दीक्षाणाम् † ॥ १४ ॥

---

* द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

यावत्य इष्टयः स्युस्तावतीः कुर्युरिति ॥ १४ ॥

**षष्टिरिति शाण्डिल्यः* ॥ १५ ॥**

शाण्डिल्य आचार्य्य आह षष्टि दीक्षाः स्युरिति ॥ १५ ॥

**प्रथमोत्तमौ संवत्सरौ व्यतिहरेदित्येकेऽभिप्लवस्तोमपृष्ठ्यदेशरोहार्थ इति † ॥ १६ ॥**

एके आचार्य्या ब्रुवते अस्मिंस्त्रिसंवत्सरे प्रथमोत्तमौ संवत्सरौ व्यतिहरेदिति प्रथमोत्तमयोः संवत्सरयोर्व्यतिहारः कथं कुर्यादिति गवामयनम् इति किमर्थम् अभिप्लवस्तोमपृष्ठ्यदेशरोहणार्थम् एवं त्रिवृत्स्तोमा अभिप्लवाः प्रथमे संवत्सरे भवन्ति त्रिवृत्पञ्चदशस्तोमा द्वितीये चातुष्टोम्येन तृतीये अभिप्लवस्तोमानामेष रोहः पृष्ठ्यदेशस्य ये पृष्ठ्यः अभिप्लवानां पुरस्तात् मध्य उपरिष्टाद्भवति ॥ १६ ॥

**यथाम्नायमेवोपेयुः ‡ ॥ १७ ॥**

यथैवाम्नाताः संवत्सरास्तथैव तानुपेयुः के हि प्रमाणमाश्रित्य प्रत्यक्षश्रुतिं प्रत्यामनन्ति तस्माद्यथाम्नायमेवोपेयुः ॥ १७ ॥

**अमावास्याप्रसवे सहस्रसंवत्सरे सहस्रसंवत्सरे* ॥ १८ ॥**

इति लाट्यायनसूत्रे दशमः प्रपाठकः।

लाट्यायनसूत्रं समाप्तम्। संवत् १९११ वर्षे भाद्रपदशुदि १५ शुक्रे वारानसीमध्ये लिखितं शुभम्भवतु ॥

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्। ‡ द्राह्यायणीये एतन्नास्ति।

उक्तं चिसंवत्सरं षट्त्रिंशसंवत्सरे पठति एकं प्रजापतेः अन्यद्विश्वसृजामयोः सोचविधिरुक्तो मन्त्रकेन कर्मविधिः सर्वः परिभाषासिद्धः केवलं प्रसवकाल उच्यते अमावास्याप्रसवे षट्त्रिंशसंवत्सरे अमावास्यायां प्रसवो ययोस्ते इमे अमावास्याप्रसवे तदा दीक्षेरन् यथा अमावास्यायां प्रसवः सम्पद्यते षष्ठ्यां पूर्वपक्षस्य दीक्षितानां तृतीयायामपरपक्षस्य क्रमः एवममावास्यायां प्रसवः सम्पद्यते ॥ १८ ॥

इति दशमस्य विंशी कण्डिका ।

इति दशमः प्रपाठकः समाप्तः ।

इत्याचार्य्येणाग्निस्वामिना कृतं लाट्यायनसूत्रभाष्यं समाप्तम् ।

संवत् १९२१ वर्षे श्रावणसुदि ४ शनौ तद्दिने काश्यां लिखितं शुभम्भवतु ॥

---

# लाट्यायनश्रौतसूत्राणां प्रतीकसूचिः ।

# अकारादिवर्णक्रमेण

## तात्पर्य्यसूची ।

---

सूचीसमाप्ता।

---

सूचीसमाप्ता।